# ॥ जाबाल्युपनिषत् ॥

जाबाल्युपनिषद्वेद्यपदतत्त्वस्वरूपकम् ।
पारमैश्वर्यविभवं रामचन्द्रपदं भजे ॥

ॐ आप्यायन्तु मामाङ्गानि वाक्प्राणश्चक्षुः
श्रोत्रमथो बलमिन्द्रियाणि च ॥ सर्वाणि सर्वं
ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा
ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेस्तु
तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥ अथ हैनं भगवन्तं जाबालिं पैप्पलादिः
पप्रच्छ भगवन्मे ब्रूहि परमतत्त्वरहस्यम् । किं
तत्त्वं को जीवः कः पशुः क ईशः को मोक्षोपाय इति ।
स तं होवाच साधु पृष्टं सर्वं निवेदयामि
यथाज्ञातमिति । पुनः स तमुवाच कुतस्त्वया ज्ञातमिति ।
पुनः स तमुवाच षडाननादिति । पुनः स तमुवाच
तेनाथ कुतो ज्ञातमिति । पुनः स तमुवाच तेनेशानादिति ।
पुनः स तमुवाच कथं तस्मात्तेन ज्ञातमिति । पुनः स
तमुवाच तदु[पासनादिति । पुनः स तमुवाच भगवन्कृपया
मे सरहस्यं सर्वं निवेदयेति । स तेन पृष्टः सर्वं
निवेदयामास तत्त्वम् । पशुपतिरहङ्काराविष्टः
संसारी जीवः स एव पशुः । सर्वज्ञः पञ्चकृत्यसम्पन्नः
सर्वेश्वर ईशः पशुपतिः । के पशव इति पुनः स तमुवाच जीवाः
पशव उक्ताः । तत्पतित्वात्पशुपतिः । स पुनस्तं होवाच कथं
जीवाः पशव इति । कथं तत्पतिरिति । स तमुवाच यथा तृणाशिनो
विवेकहीनाः परप्रेष्याः कृष्यादिकर्मसु नियुक्ताः
सकलदुःखसहाः स्वस्वामिबध्यमाना गवादयः पशवः ।
यथा तत्स्वामिन इव सर्वज्ञ ईशः पशुपतिः । तज्ज्ञानं
केनोपायेन जायते । पुनः स तमुवाच विभूतिधारणादेव ।
तत्प्रकारः कथमिति । कुत्रकुत्र धार्यम् । पुनः स तमुवाच
सद्योजातादिपञ्चब्रह्ममन्त्रैर्भस्म संगृह्याग्निरिति
भस्मेत्यनेनाभिमन्त्र्य मानस्तोक इति समुद्धृत्य जलेन
संसृज्य त्र्यायुपमिति शिरोललाटवक्षःस्कन्धेष्विति
तिसृभिस्त्र्यायुपैस्त्रियम्बकैस्तिस्रो रेखाः प्रकुर्वीत ।
व्रतमेतच्छाम्भवं सर्वेषु वेदेषु वेदवादिभिरुक्तं

भवति । तत्समाचरेन्मुमुक्षुर्न पुनर्भवाय । अथ सनत्कुमारः प्रमाणं पृच्छति । त्रिपुण्ड्रधारणस्य त्रिधः रेखा आललाटादाचक्षुषोराभ्रुवोर्मध्यतश्च । यास्य प्रथमा रेखा सा गार्हपत्यश्चाकारो रजो भूर्लोकः स्वात्मा क्रियाशक्तिः ऋग्वेदः प्रातःसवनं प्रजापतिर्देवो देवतेति । यास्य द्वितीया रेखा सा दक्षिणाग्निरुकारः सत्वमन्तरिक्षमन्तरात्मा चेच्छाशक्तिर्यजुर्वेदो माध्यन्दिनसवनं विष्णुर्देवो देवतेति । यास्य तृतीया रेखा साहवनीयो मकारस्तमो द्यौर्लोकः परमात्मा ज्ञानशक्तिः सामवेदस्तृतीयसवनं महादेवो देवतेति त्रिपुण्ड्रं भस्मना करोति । यो विद्वान्ब्रह्मचारी गृही वानप्रस्थो यतिर्वा स महापातकोपपातकेभ्यः पूतो भवति । स सर्वान्देवान्ध्यातो भवति । स सर्वेषु तीर्थेषु स्नातो भवति । स सकलरुद्रमन्त्रजापी भवति । न स पुनरावर्तते न स पुनरावर्तते ॥ इति । ॐ सत्यमित्युपनिषत् ॥

ॐ आप्यायन्तु मामाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च ॥ सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ हरिः ॐ तत्सत् ॥

इति श्रीजाबाल्युपनिषत्समाप्ता ॥